व्याख्यास्तत्वस्य याः परं । स्याद्वादं ताः समायान्ति सरितः सागरं यथा ॥ ४ ॥ ततः स्याद्वादमालम्ब्य रागद्वेषौ विवर्जयेत् । मतानि वापि सर्वेषां न निन्द्यान्न स्तुयादपि ॥५॥ ज्ञानं स्याद्वादमालम्ब्य दर्शनं चाहरेद्धृदि । मिथ्यात्वमिश्रसम्यक्त्ववर्जितं क्षायकादिकं ॥ ६ ॥ यच्छ्रद्धानमनैकान्त्ये या भृशं निःकषायता । विषयोपशमो यस्तु तद्दर्शनमुदीरितं ॥ ७ ॥ कदाग्रहो न सम्यक्त्वं मिथ्यादर्शनमेव तत् । यच्च स्याद्वादमालम्ब्य श्रद्धानं तद्धि दर्शनं ॥ ८ ॥ तस्मादेकग्रहं मुक्त्वा रागद्वेषविवर्जितः । मनःशुद्धिसमायुक्तो मोक्षार्थी दर्शनं श्रयेत् ॥ ९ ॥ चारित्रं नाम यत्तत्र मुण्डने लुञ्चनेपि वा । न नाग्न्ये चीवरादाने जटानां वन्धने न च ॥ २१० ॥ न रक्तश्वेतवस्त्रत्वे नैव वल्कलधारणे । न भिक्षाभोजने नाग्निजलाद्यैः स्वाङ्गतापने ॥ ११ ॥ या दया सर्वभूतेषु यत्सत्यं च हितं वचः । यन्निस्पृहत्वं भावेषु ब्रह्मचर्यं त्रिधा च यत् ॥ १२ ॥ शत्रौ मित्रे भवे मोक्षे स्वर्णे पाषाण एव च । वने पुरे गृहे वृक्षे तृणे स्त्रैणे विषेऽमृते ॥ १३ ॥ नृपे रङ्के सुजने च दुर्जने बालिशे बुधे । चन्दनेऽग्नौ यत्समत्वं यत्सर्वेषामनिन्दनं ॥ १४ ॥ यदात्मनिन्दनं चैव परोपेक्षाविवर्जितं । सर्वजीवहितत्वं यद्यद्रागद्वेषघातनं ॥ १५ ॥ या सान्तता परं गाढा यदन्यरतिवर्जनं । भयशोकजुगुप्सानामभावः परमार्जनं ॥ १६ ॥ क्षमाया गतमोहत्वं यत्सावद्योज्झितं मनः । एतदेव हि चारित्रं मोक्षाध्वा सरलो मतः ॥ १७ ॥ जटिलो मुण्डितो वापि गृही वा म्लेच्छ एव वा । एतच्चारित्रमासाद्य मोक्षं प्राप्नोति निश्चितं ॥ १८ ॥ ज्ञानदर्शनचारित्राण्येवं मोक्षपथः परं । अन्यस्तु सरलः पन्थाः श्रूयते नात्मसंगतः ॥ १९ ॥ मैत्रीप्रमोदकारुण्यमाध्यस्थै-

मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत्।
वीसितं मनः। समाधानेन संपृक्त मोक्षदानाय कल्पते ॥ २२० ॥ मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत्। न
ध्यानसाध्यं मत तच्च तद्ध्यानं हितमात्मनः ॥ २१ ॥ न साम्येन विना ध्यान न ध्यानेन विना च तत्। न
कम्पं जायते तस्माद्द्वयमन्योन्यकारणं॥ २२ ॥ तस्मात्समाधिमासाद्य प्राप्नुवन्ति शिवं जनाः। तपोभिर्दुष्करैश्ची-
र्णैर्न समाधिं विना क्वचित् ॥ २३ ॥ औदासीन्यं हि सर्वत्र देहिनां मोक्षकारण। प्रतिबन्धस्तु यस्तत्र मानसो
बन्धकृच सः ॥२४॥ शब्दरूपरसस्पर्शगन्धैर्युक्तो मनोहरैः। औदासीन्यसमाधिस्थो न लेपं प्राप्नुयाज्जनः ॥२५॥
मनः सर्वेषु भावेषु प्रसरत्सु निरर्गल। औदासीन्यसमासीनं न बन्धाय प्रकल्पते ॥ २६ ॥ विहाय सर्वतत्त्वानि
याह्यानि विबुधो जनः। आत्मज्ञाने परं चेतः स्थापयेत्स्थिरतां गतं ॥ २७ ॥ जन्मकोटिगतैर्दानैस्तपोभिरति-
सत्तमैः। आत्मज्ञान विना नैव मोक्षो भवति देहिनां ॥ २८ ॥ संगृह्णन्सर्वविषयान्सर्वकर्मकरोपि हि। आत्म-
ज्ञानी न बन्धेन बध्यते भवहेतुना ॥ २९ ॥ न पुण्यं नैव [illegible] पापं जायते विदितात्मनां ॥ शुभाशुभैः कृतैः
कार्यैर्ध्यानाग्निप्लुष्टकर्मणां ॥ २३० ॥ यथा घृतप्लुते कुम्भे जलक्लेदो न जायते। तथात्मज्ञातरि परं कर्मबन्धो
न कुत्रचित् ॥ ३१ ॥ भवेदात्मविदः सर्वं तृणवद्विष्टपं श्रुतं। आत्मानन्दविनिर्मग्नो नान्यज्जानाति किंचन
॥ ३२ ॥ ततः सद्गुरुयोगेन ज्ञात्वात्मानं नरोत्तमः। समाधानं परं चेतो निदधीत क्रमोज्वलं ॥ ३३ ॥ यथा
गृहस्थधर्मेषु सुभार्या सारमुत्तमं। तथा यतीनां सर्वेषां समाधिर्मोक्षकारणं ॥ ३४ ॥ परित्यज्याखिलं जालं
व्यर्थं वाग्वैभवोदित। आत्मज्ञानात्समाधाने स्थाप्यं मोक्षार्थिभिर्मनः ॥ ३५ ॥ आचारसपादितसर्वकार्यो

आत्मज्ञताप्राप्तविशुद्धभावाः ॥ समाधितः प्राप्य शिवं वरिष्ठा नरा महानन्दभृतो जयन्ति ॥ २३६ ॥ इत्याचार्यवर्धमानसूरिकृते आचारदिनकरे तत्वालोककीर्तनो नाम महोद्योतः संपूर्णः ॥

॥ संपूर्णमिदमाचारदिनकराख्यं जैनशास्त्रम् ॥

# ग्रन्थकर्तृप्रशस्तिः ।

जयति प्रथमो नृपतिः प्रथमाचारप्रबोधको जगतां । प्रथमोऽर्हत्प्रथममुनिः प्रथमो देवाधिदेवानाम् ॥ १ ॥ जयत्यनन्तविज्ञानज्ञानयुक्तिप्रकाशकः । भगवान् श्रीमहावीरस्तीर्थकृच्चरमः परम् ॥ २ ॥ भूयाद्विविधसिद्धानामास्पदं गणनायकः । श्रिये तत्त्वविदां श्रीमानिन्द्रभूतिर्दयानिधिः ॥ ३ ॥ आपष्ठारान्मुनीन्द्राणां संहतिर्यस्य संततिः । श्रीवर्धमानान्तेवासी सुधर्माभूद्गणेश्वरः ॥ ४ ॥ गणाः संख्यातिगास्तस्माद्बभूवुः साधुशालिनः । तेभ्यः कुलानि शाखाश्च प्रसस्रुः प्रौढचेष्टितैः ॥ ५ ॥ तत्राभूत्कोटिकगणः श्रीमद्वज्रमुनीश्वरात् । वाज्रीशाखा कुलं चान्द्रं तत्रापि परिपप्रथे ॥ ६ ॥ पूर्वं श्रीहरिभद्राख्यः सूरीन्द्रो भद्रदर्शनः । तत्र वित्रस्तवादीभः पञ्चवक्त्रो व्यराजत ॥ ७ ॥ श्रीयाकिनीवदनसंभववाक्यलेशं सम्यग्विधाय हृदये विलसद्दयेन । येनावनं सुगतसाधुजनस्य चक्रे चित्रं तदत्र मुनयो विमृशन्ति चित्ते ॥ ८ ॥ देवचन्द्रस्ततः सूरिश्चन्द्रतां प्रत्यपद्यत । मोहान्धकारसंसारतापपीडितचेतसां ॥ ९ ॥ श्रीनेमिचन्द्रसूरीन्द्रो भूषयामास तत्पदं । तत उद्योतनः पट्टोद्योतं तस्य विनिर्ममे ॥ १० ॥ ततः श्रीवर्धमानाख्यः सूरिर्दुर्वादिनां मदं । वर्धयन्वर्धयामास समस्तं जिनशासनं ॥ ११ ॥ श्रीमज्जिनेश्वरः सूरिर्जिनेश्वरमतं ततः । शरद्राकाशशिस्पष्टसमुद्रसदृशं व्यधात् ॥ १२ ॥ नवाङ्गवृत्ति-

कृतपट्टेऽभयदेवप्रभुर्गुरोः। तस्य स्तम्भनकाधीशमाविश्चक्रे समं गुणैः ॥ १३ ॥ आद्यप्रबोधप्रवणस्तत्पट्टे जिनवल्लभः। सूरिर्वल्लभतां भेजे त्रिदशानां नृणामपि ॥ १४ ॥ ततः श्रीरुद्रपल्लीयगच्छसंज्ञालसद्यशाः। नृपशेखरतां भेजे सूरीन्द्रो जिनशेखरः ॥१५॥ दुर्वादिपद्मचन्द्राभां पद्मचन्द्रगणाग्रणीः। बभार तत्पदे पद्मां मुदा निच्छद्मतां गतः ॥ १६ ॥ श्रीमान्विजयचन्द्राख्यः सूरिर्विजयमादधे। ततस्तस्य पदे रेजेऽभयदेवगणाधिपः ॥ १७ ॥ देवभद्रस्ततो भद्रंकरसूरिरजायत। प्रभानन्दो महानन्दं ततः संघेऽप्यवर्धयत् ॥ १८ ॥ श्रीश्रीचन्द्रगणाधीशः श्रीदोऽजनि ततो गुरुः। तत्पट्टे जिनभद्राख्यः सूरिर्भद्रं ततान च ॥ १९ ॥ जगत्त्रयमतां प्राप्तो जगत्तिलकसूरिराट्। सिद्ध्या तपःसमृद्ध्या च द्योतयामास भूतलं ॥ २० ॥ गुणचन्द्रगुरुस्तस्माद्गुणैश्चन्द्रकरोज्वलः। तत्पट्टेऽभयदेवाख्यः प्रख्यातोऽजनि सूरिराट् ॥ २१ ॥ तत्पट्टे सांप्रतं विश्वविश्वविख्यातसद्गुणः। श्रीमान्सूरिर्जयानन्दो जयानन्दमहास्पदं ॥ २२ ॥ दुर्वादिमदसंहर्ता हर्ता च सकलांहसां। विभाति सर्वदेशेषु विहर्ता गणनायकः ॥ २३ ॥ युग्मं। स्वं गच्छं शासतस्तस्य तत्पट्टेऽभयसद्गुरोः। शिष्यः श्रीवर्धमानाख्यः सूरिरस्ति प्रशान्तधीः ॥ २४ ॥ तेनालोक्यागमार्थं च श्रीमदावश्यकोदितं। दिग्वस्त्रश्वेतवस्त्राणां शास्त्राचारं विचार्य च ॥ २५ ॥ हिताय सर्वसाधूनामाचारख्यापनाय च। निर्ममे शास्त्रमेतच्च दुष्टकर्मक्षयाय च ॥ २६ ॥ युग्मम्। पुरे नन्दवनाख्ये च श्रीजालन्धरभूषणे। अनन्तपालभूपस्य राज्ये कल्पद्रुमोपमे ॥ २७ ॥ श्रीमद्विक्रमभूपालादष्टषण्मनु १४६८ संख्यके। वर्षे कार्तिकराकायां ग्रन्थोयं पूर्तिमाययौ ॥ २८ ॥ युग्मं। शिष्यः श्रीमज्जयानन्दगुरो-

लिखनकर्मणि । तेजःकीर्तिमुनिश्चक्रे साहायकमहर्निशम् ॥ २९ ॥ अज्ञानादागमार्थस्य मूढत्वात्किंचिदीरितम् । अशुद्धमत्र यत्तत्र मिथ्यादुःकृतमस्तु मे ॥ ३० ॥ दुरुक्तं शोधनीयं च निरसूयैर्मुनीश्वरैः । सदुक्तमनुमोद्यं च पाठ्यं शिष्यगणस्य च ॥ ३१ ॥ यावद्धराधरधराशशिसूर्यमेरुवारीश्वरा भुवनमेव विभूषयन्ति । तावत्सुसाधुनिकरैः परिपठ्यमानं शास्त्रं तनोतु हृदये कृतिनां प्रमोदम् ॥ ३२ ॥ इति शास्त्रकारप्रशस्तिः संपूर्णा ॥ ॥

इति श्रीमण्डलाचार्यकमलसूरिविकासित–खरतरगच्छमालाद्वितीयपुष्परूपे श्रीवर्धमानसूरिविरचित आचारदिनकरस्य द्वितीयविभागः संपूर्णः ।



इति आचारदिनकरस्य द्वितीयविभागः संपूर्णः ॥